सत्याषाढविरचितं

# हिरण्यकेशि शुल्ब सूत्रम्

हिरण्यकेशि श्रौतसूत्रे पञ्चविंशप्रश्नः

## अथ प्रथमः पटलः

अथातो विहारयोगान्व्याख्यास्यामः १ यावदायामं प्रमाणम् २ तदर्धमभ्यस्य ३ अपरस्मिँस्तृतीये षड्भागोने लक्षणं करोति ४ पृष्ठ्यान्तयोरन्तौ नियम्य ५ लक्षणेन दक्षिणाऽपायम्य निमित्तं करोति ६ एवमुत्तरतः ७ विपर्यस्येतरतः ८ स समाधिः ९ तन्निमित्तो निह्रासो वृद्धिर्वा १० आयामं वाऽभ्यस्याऽऽगन्तुचतुर्थमायामश्चाक्ष्ण-यारज्जुस्तिर्यङ्मानी शेषः ११ व्याख्यातं विहरणम् १२ दीर्घचतुर-श्रस्याक्ष्णयारज्जुः पार्श्वमानी तिर्यङ्मानी च यत्पृथग्भूते कुरुतस्तदुभयं करोति १३ ताभिर्ज्ञेयाभिरुक्तं विहरणम् १४ समचतुरश्र-स्याक्ष्णयारज्जुर्द्विस्तावतीं भूमिं करोति समस्य द्विकरणीम् १५ प्रमाणं तृतीयेन वर्धयेत् १६ तच्चतुर्थेनाऽऽत्मचतुस्त्रिँशोनेन १७ सविशेषः १८ प्रमाणं चार्धेन वर्धयेत्तस्यार्धमस्यार्धमर्धस्य चार्धमभ्यन्तरमुद-स्येच्छेषस्यार्धं बाह्यतः शिष्टं द्विगुणं कृत्वा मध्ये लक्षणं करोति १९ अथापरो योगः २० प्रमाणमात्रीँ रज्जुमुभयतःपाशां करोति २१ मध्येलक्षणमर्धमध्ययोश्च पृष्ठ्यायाँ रज्जुमायम्य पाशयोर्लक्षणेष्विति शङ्कून्निहन्त्युपान्त्ययोः पाशौ प्रतिमुच्य मध्यमेन लक्षणेन दक्षिणाऽपायम्य निमित्तं करोति । मध्यमे पाशौ प्रतिमुच्योपर्युपरि निमित्तं मध्यमेन लक्षणेन दक्षिणाऽपायम्य शङ्कुं निहन्ति । तस्मिन्पाशं प्रतिमुच्य पूर्वस्मिन्नितरं मध्यमेन लक्षणेन दक्षिणमँसमायच्छेदुन्मुच्य पूर्वस्मादपरस्मिन्प्रतिमुच्य मध्यमेनैव लक्षणेन दक्षिणाँ श्रोणि-मायच्छेदेवमुत्तरौ श्रौणयँसौ २२ अथापरं पृष्ठ्यान्तयोर्मध्ये च शङ्कून्निहत्यार्धे तद्विशेषमभ्यस्य लक्षणं कृत्वाऽर्धमागमयेदन्त्ययोः

पाशौ कृत्वा मध्यमे सविशेषं प्रतिमुच्य पूर्वस्मिन्नितरं लक्षणेन दक्षिणमँसमायच्छेदुन्मुच्य पूर्वस्मादपरस्मिन्प्रतिमुच्य लक्षणेनैव दक्षिणाँ श्रोणिमायच्छेदेवमुत्तरौ श्रोण्यँसौ २३ प्रमाणं तिर्यग्द्विकरण्यायामस्तस्याक्ष्णयारज्जुस्त्रिकरणी २४ तृतीयकरण्येतेन व्याख्याता । विभागस्तु नवधा २५ तुल्ययोश्चतुरश्रयोरुक्तः समासः २६ नानाप्राणयोश्चतुरश्रयोः समासः २७ ह्रसीयसः करण्या वर्षीयसो वृद्धमुल्लिखेत् २८ वृद्धस्याक्ष्णयारज्जुरुभे समस्यति २९ तदुक्तं चतुरश्राच्चतुरश्रं निजिहीर्षन्यावन्निजिहीर्षेत्तस्य करण्या वृद्धमुल्लिखेद्वृद्धस्य पार्श्वमानीमक्ष्णयेतरत्पार्श्वमुपसँहरेत् । सा यत्र निपतेत्तदपच्छिन्द्यात् ३० छिन्नया निरस्तम् ३१ उपसंहृताऽक्ष्णयारज्जुः सा चतुष्करणी ३२ छिन्ना चेतरा च यत्पृथग्भूते कुरुतस्तदुभयं करोति ३३ तिर्यङ्मानी पुरुषँ शेषस्त्रीन् ३४ तदुक्तम् ३५ दीर्घचतुरश्रँ समचतुरश्रं चिकीर्षँस्तिर्यङ्मा न्याऽपच्छिद्य शेषं विभज्योभयत उपदध्यात् ३६ खण्डमागन्तुना संपूरयेत् ३७ तस्य निर्ह्रास उक्तः ३८ समचतुरश्रं दीर्घचतुरश्रं चिकीर्षन्यावच्चिकीर्षेत्तावतीं पार्श्वमानीं कृत्वा यावदधिकँ स्यात्तद्यथापरिमाणं विभज्य यथायोगमुपदध्यात् ३९ चतुरश्रं मण्डलं चिकीर्षन् ४० मध्यात्कोटयां निपातयेत् ४१ पार्श्वतः परिकृष्यातिशयतृतीयेन सह मण्डलं परिलिखेत् ४२ साऽनित्या मण्डलम् ४३ यावद्धीयते तावदागन्तु ४४ मण्डलं चतुरश्रं चिकीर्षन्विष्कम्भं पञ्चदशभागान्कृत्वा द्वावुद्धरेत्त्रयोदशावशिष्यन्ते साऽनित्या चतुरश्रम् ४५ प्रमाणेन प्रमाणं विधीयते चतुरश्रम् ४६ आदेशादन्यत् ४७ द्वाभ्यां चत्वारि ४८ त्रिभिर्नव ४९ यावत्प्रमाणा रज्जुस्तावतस्तावतो वर्गान्करोति ५० तथोपलब्धिः ५१ अध्यर्धपुरुषा रज्जुर्द्वौ सपादौ करोति ५२ अध्यर्धतृतीयपुरुषा षट्सपादानथात्यन्तप्रदेशः ५३ यावता यावताऽधिकेन परिलिखति

तत्पार्श्वयोरुपदधाति ५४ यत्तेन चतुरश्रं करोति तत्कोटद्याम् ५५ अर्धप्रमाणेन पादप्रमाणं विधीयते ५६ अर्धस्य द्विप्रमाणायाः पादपूरणत्वात् ५७ तृतीये नवमी कला ५८

इति सत्याषाढहिरगयकेशिसूत्रे पञ्चविंशप्रश्ने प्रथमः पटलः

## अथ द्वितीयः पटलः

आग्न्याधेयिके विहारे गार्हपत्याहवनीययोरन्तराले विज्ञायते १ अष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत । एकादशसु राजन्यः । द्वादशसु वैश्यः । चतुर्विंशत्यामपरिमिते यावता वा चक्षुषा मन्येत । तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते २ दक्षिणतः पुरस्ताद्द्वितृतीयदेशे नेदीयसि गार्हपत्यस्य दक्षिणाग्नेर्विज्ञायते ३ गार्हपत्याहवनीययोरन्तरालं पञ्चधा षड्धा वा संभुज्य षष्ठँ सप्तमं वा भागमागन्तुमुपसमस्य समं त्रैधं विभज्य ४ अपरस्मिँस्तृतीये लक्षणं करोति गार्हपत्याहवनीययोरन्तौ नियम्य लक्षणेन दक्षिणाऽपायम्य निमित्तं करोति । दक्षिणाग्नेरायतनँ श्रुतिसामर्थ्यात् ५ यज-मानमात्री प्राच्यपरिमिता वा यथाऽसन्नानि हवीँषि संभवेदेवं तिरश्ची प्राञ्चौ वेद्यँसावुन्नयत्यभित आहवनीयं प्रतीची श्रोणी अभिगार्हपत्यं मध्ये संनततरैवमिव हि योषेति दार्शिक्या वेदेर्विज्ञायते । अपरेणाऽऽहवनीयं यजमानमात्रं दीर्घचतुरश्रं विहृत्य तावतीं रज्जुम-भ्यस्योभयतः पाशौ करोति । मध्ये लक्षणं दक्षिणयोः श्रोरायँस-योरन्तौ नियम्य लक्षणेन दक्षिणाऽपायम्य निमित्तं करोति । रज्जुं नियम्यान्तौ समस्य दक्षिणस्याः श्रोणेर्दक्षिणमँसमालिखेत् । एव-मुत्तरतः । तिर्यङ्मानीं द्विगुणां तथा कृत्वा पश्चात्पुरस्ताच्चोपलिखेत् । विमितायां पुरस्तात्पार्श्वमान्यावुपसँहरेच्छ्रुतिसामर्थ्यात् ६ त्रिँशत्पदानि प्रक्रमा वा । पश्चात्तिरश्ची भवति षट्त्रिँशत्प्राची

चतुर्विँशतिः पुरस्तात्तिरश्चीति सौमिक्या वेदेर्विज्ञायते । षट्त्रिँशिकायामष्टादशोपसमस्यापरस्मादन्ताद्द्वादशसु लक्षणं पञ्चदशसु लक्षणम् । पृष्ठ्यान्तयोरन्तौ नियम्य पाञ्चदशिकेन दक्षिणाऽपायम्य शङ्कुं निहन्त्येवमुत्तरतस्ते श्रोणी ७ विपर्यस्तयाऽँसौ तेनैवापायम्य द्वादशिके शङ्कुं निहन्त्येवमुत्तरतस्तावँसौ ८ तदेकरज्ज्वा विहरणं त्रिकचतुष्कयोः पञ्चिकाऽक्ष्णयारज्जुः ९ ताभिस्त्रिरभ्यस्ताभिरँसौ १० चतुरभ्यस्ताभिः श्रोणी ११ द्वादशिकपञ्चकयोस्त्रयोदशिकाऽक्ष्णयारज्जुस्ताभिरँसौ १२ द्विरभ्यस्ताभिः श्रोणी १३ पञ्चदशिकाष्टकयोः सप्तदशिकाऽक्ष्णयारज्जुस्ताभिः श्रोणी १४ द्वादशपञ्चत्रिँशिकयोः सप्तत्रिँशिकाऽक्ष्णयारज्जुस्ताभिरँसौ १५ एतावन्ति ज्ञेयानि वेदिविहरणानि भवन्ति १६ अष्टाविँशत्योनं पदसहस्रं महावेदिः १७ दक्षिणादँसाद्द्वादशसु दक्षिणस्याँश्रोण्यां निपातयेच्छेदं विपर्यस्येतरत उपदध्यात् । सा दीर्घचतुरश्रा महावेदिस्तथायुक्ताँ संचक्षीत १८ सौमिक्या वेदितृतीये यजत इति सौत्रामण्या विज्ञायते १९ प्रक्रमस्य तृतीयकरणी प्रक्रमस्थानीया भवति २० त्रिकरण्या वा २१ अष्टिकदशिके तिर्यङ्मान्यौ १२ द्वादशिका पृष्ठ्या २३ त्रीणि चतुर्विँशानि पदशतानि सौत्रामणिकी वेदिः २४ द्विस्तावा वेदिर्भवतीति चाश्वमेधे विज्ञायते २५ प्रक्रमस्य द्विकरणी प्रक्रमस्थानीया भवति २६ प्रक्रमो द्विपदस्त्रिपदो वा २७ प्रक्रमे याथाकामी शब्दार्थस्य विशयित्वात् २८ यजमानस्य २९ अध्वर्योर्वा ३० एष हि चेष्टानां कर्ता भवति ३१ रथमात्री निरूढपशुबन्धस्य वेदिर्भवतीति विज्ञायते ३२ तत्र खल्वाहुः ३३ रथेषामात्री प्राची रथाक्षमात्री पश्चात्तिरश्ची विपथयुगमात्री पुरस्तात्तिरश्ची ३४ यावता वा बाह्ये छिद्रे । तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायम्य ३५ अर्धाक्षेणार्धयुगेनेति श्रोण्यँसान्निर्हरेत्

३६ अथाप्युदाहरन्ति ३७ अष्टाशीतिशतमीषा तिर्यगक्षश्चतुःशतँ षडशीतिर्युगमाहुः । स रथश्चारण उच्यत इति रथपरिमाणम् ३८ अरत्निभिर्वा षड्भिःप्राची । चतुर्भिः पश्चात्तिरश्ची त्रिभिः पुरस्तात्तिरश्ची तदेकरज्ज्वोक्तमध्यर्धे रज्ज्वौ द्वयोरर्धतृतीययोः षट्स्विति लक्षणानि करोति नवसु पाशं पृष्ठ्यान्तयोरन्तौ नियम्यार्धतृतीयकेन दक्षिणाऽपायम्य द्वयोः शङ्कुं निहन्त्येवमुत्तरतस्ते श्रोणी विपर्यस्तयाऽँसौ तेनैवापायम्याध्यर्धे शङ्कुं निहन्ति । एवमुत्तरतस्तावँसौ । दशपदोत्तरवेदिर्भवेदिति सोमे विज्ञायते ३९ तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायम्यार्धेन ततः श्रोण्यँसान्निर्हरेत् ४० विमितायां पुरस्तात्पार्श्वमान्यावुपसँहरेत् ४१ श्रुतिसामर्थ्यात् ४२ पदे युगेऽरत्नावियति प्रादेशे प्रक्रमे शम्यायां च मानार्थेषु याथाकामी शब्दार्थस्य विशयित्वात् ४३ यजमानमात्री चतुःस्रक्तिर्भवतीति पैतृक्या वेदेर्विज्ञायते ४४ तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायाम्यार्धेन ततः श्रोण्यँसान्निर्हरेत् ४५ नवारत्निस्तिर्यक्सप्तविँशतिरुदगायतमिति सदसो विज्ञायते ४६ अष्टादशेत्येकेषाम् । तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायम्यार्धपञ्चमैः श्रोण्यँसान्निर्हरेत् ४७ प्रादेशमुखाः प्रादेशान्तरालाः । भवन्तीत्युपरवाणां विज्ञायते ४८ अरत्निमात्रं चतुरश्रं विहृत्य स्रक्तिषु शङ्कुं निहत्यार्धप्रादेशेन तं तं परिलिखेच्छ्रुतिसामर्थ्यात् ४९ व्यायाममात्री चतुःस्रक्तिर्भवतीति गार्हत्यचितेर्विज्ञायते ५० चतुरश्रेत्येकेषाम् । परिमण्डलेत्येकेषाम् ५१ करणं व्यायामस्य तृतीयायामँ सप्तमं व्यासं कारयेत् ५२ ता एकविँशतिर्भवन्ति ५३ उपधाने प्रागायामाः प्रथमे प्रस्तारेऽपरस्मिन्नुदगयामाः ५४ मण्डलायां मृदो देहं कृत्वा मध्ये शङ्कुं निहत्यार्धव्यायामेन मण्डलं परिलिखेत् ५५ तस्मिँश्चतुरश्रमवदध्याद्यावत्संभवेत् ५६ तन्नवधा व्यवलिख्य ५७ त्रैधमेकैकं

प्रधिकं विभज्य तदुपधीयते ५८ चतुरश्रस्यावान्तरदेशान्प्रति स्रक्तीः संपादयेत् ५९ मध्यानीतरस्मिन्प्रस्तारे ६० व्यत्यासं चिनुयाद्यावतः प्रस्तारा꣡श्चिकीर्षेत् ६१ पिशीलमात्रा भवन्तीति धिष्णियानां विज्ञायते । चतुरश्रा इत्येकेषाम् ॥ परिमण्डला इत्येकेषाम् ६२ मृदो देहान्कृत्वा ६३ आग्नीध्रीयं नवधा व्यवलिख्यैकस्याः स्थाने-ऽश्मानमवधाय यथासंख्यमितरान्व्यवलिख्य यथायोगमुपदध्यात् ६४

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चविंशप्रश्ने द्वितीयः पटलः

अथ तृतीयः पटलः

भवतीव खलु वा एष योऽग्निं चिनुत इति विज्ञायते १ वयसां या एष प्रतिमया चीयत इत्याकृतिचोदनात् २ प्रत्यक्षविधानाद्वा याव-दाम्नातेन ३ वेणुना सप्त पुरुषान्विमिमीते त्रीन्प्राचः पुरुषा꣡श्चतुरुदीच-स्तिर्यञ्चं पुरुषमात्राणि पक्षपुच्छानि भवन्ति । आत्मा चतुष्पुरुषः ४ अरत्निना दक्षिणतो दक्षिणं पक्षं प्रवर्धयति ५ प्रादेशेन वितस्त्या वा पश्चात्पुच्छम् ६ अरत्निनोत्तरं पक्षम् ७ एकविधः प्रथमोऽग्निः । द्विविधो द्वितीयः । त्रिविधस्तृतीयः । त एवमेवोद्यन्त्यैकशतविधात् ८ तदु ह वै सप्तविधमेव चिन्वीत ९ सप्तविधो वा प्राकृतोऽग्निस्तत ऊर्ध्वमेकोत्तरानिति विज्ञायते १० एकविधप्रभृतीनां न पक्षपुच्छानि भवन्ति ११ सप्तविधवाक्यशेषत्वात् १२ श्रुतिविप्रतिषेधाच्च १३ अष्टविधप्रभृतीनां यदन्यत्सप्तभ्यस्तत्सप्तधा विभज्य प्रतिपुरुषमा-वेशयेत् १४ आकृतिविकारस्याश्रुतत्वात् १५ पुरुषमात्रेण विमिमीते वेणुना विमिमीत इति विज्ञायते १६ यावान्यजमान ऊर्ध्वबा-हुस्तावदन्तराले वेणोश्छिद्रे करोति १७ मध्ये तृतीयम् १८ अपरेण यूपावटदेशमनुपृष्ठ्यं प्राञ्चं वेणुं निधाय १९ छिद्रेषु शङ्कून्निह-

त्योन्मुच्यापराभ्यां दक्षिणा प्राक् परिलिखेत् । आऽन्तादुन्मुच्य पूर्वस्मादपरस्मिन्प्रतिमुच्य दक्षिणा प्रत्यक्परिलिखेदाऽन्तात् २० उन्मुच्य वेणुं मध्यमे शङ्कावन्त्यच्छिद्रं प्रतिमुच्योपर्युपरि लेखासमरं दक्षिणां वेणुं निधायान्त्ये छिद्रे शङ्कुं निहत्य तस्मिन्मध्यमच्छिद्रं प्रतिमुच्य लेखान्तयोरितरे प्रतिष्ठाप्य च्छिद्रयोः शङ्कू निहन्ति । स पुरुषश्चतुरश्रः २१ एवं विहितान्प्रदक्षिणं चतुर आत्मनि पुरुषान्विमिमीते २२ पुरुषं दक्षिणे पक्षे पुरुषं पुच्छे पुरुषमुत्तरे २३ अरत्निना दक्षिणतो दक्षिणमित्युक्तम् २४ पृष्ठ्यातो वा पुरुष-मात्रस्याक्ष्णया वेणुं निधाय पूर्वस्मिन्नितरं ताभ्यां दक्षिणमँसं निर्हरेत् २५ विपर्यस्य श्रोणी २६ पूर्ववदुत्तरमँसम् २७ रज्ज्वा वा विमायोत्तरवेदिन्यायेन वेणुना विमिमीते २८ सपक्षपुच्छेषु विधाभ्यासेऽपचये च विधासप्तमकरणीं पुरुषस्थानीयां कृत्वा तया विहरेत् २९ करणानीष्टकानां पुरुषस्य पञ्चमेन कारयेत् ३० तासा-मेकैकतोऽध्यर्धास्तद्द्वितीयम् ३१ पुरुस्य पञ्चमो भाग एकतः प्रादेश एकतस्तत्तृतीयम् ३२ सर्वतः प्रादेशस्तच्चतुर्थँ समचतुरश्राः पञ्चदश-भागीयास्तत्प्रञ्चमम् ३३ ऊर्ध्वप्रमाणमिष्टकानाम् । जानोः पञ्चमेन कारयेत् ३४ अर्धेन नाकसदां पञ्चचोडानां च ३५ यत्पच्यमानानां प्रतिह्रसेत्पुरीषेण तत्संपूरयेत् ३६ अनियतपरिमाणत्वात्पुरीषस्य ३७ उपधानेऽध्यर्धा दश पुरस्तात्प्रतीचीरात्मन्युपदध्यात् ३८ दश पश्चात्प्राचीः ३९ पञ्च पञ्च पक्षाग्रयोः पक्षाप्यययोश्च विशयास्तासा-मर्धेष्टकामात्राणि पक्षयोर्भवन्ति ४० पञ्च पञ्च पुच्छपार्श्वयोर्दक्षिणाः । उदीचीश्च पुच्छे प्रादेशमुपधाय ४१ सर्वमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् ४२ पञ्चदशभागीयाभिः संख्यां पूरयेत् ४३ अपरस्मि-न्प्रस्तारेऽध्यर्धा दश दक्षिणत उदीचीरात्मन्युपदध्याद्दशोत्तरतो दक्षिणाः ४४ यथा प्रथमे प्रस्तारे पक्षौ तथा पुच्छम् । यथा पुच्छं

तथा पक्षौ । विपरीताऽप्यये ४५ सर्वमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् । पञ्चदशभागीयाभिः संख्यां पूरयेत् ४६ व्यत्यासं चिनुयाद्यावतः प्रस्तारा ँश्चिकीर्षेत् ४७ पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहतीति विज्ञायते । पुरीषान्ता चितिरर्थान्तरत्वात्पुरीषस्य ४८ जानुदघ्नं सहस्रं चिन्वीत प्रथमं चिन्वानः ४९ नाभिदघ्नं द्विषाहस्रं द्वितीयम् ५० आस्यदघ्नं त्रिषाहस्रं तृतीयम् ५१ उत्तरमुत्तरं ज्याया ँसं महान्तं बृहन्तमपरिमितं स्वर्गकामश्चिन्वीतेति विज्ञायते ५२ द्विषाहस्रे द्विप्रस्ताराश्चितयो भवन्ति । त्रिषाहस्रे त्रिप्रस्ताराः । चतुर्थप्रभृत्याहारेषु नित्यमिष्टकापरिमाणम् ५३ विज्ञायते च न ज्याया ँसं चित्वा कनीया ँसं चिन्वीतेति ५४

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चविंशप्रश्ने तृतीयः पटलः

## अथ चतुर्थः पटलः

चतुरश्राभिरग्निं चिनुत इति विज्ञायते १ समचतुरश्रा अनुपपदत्वाच्छब्दस्य २ पादमात्र्यो भवन्ति । अणूकमात्र्यो भवन्ति । ऊर्वस्थिमात्र्यो भवन्ति । अरत्निमात्र्यो भवन्ति । प्रादेशमात्र्यो भवन्तीति विज्ञायते ३ चतुर्भागीयाऽणूकं पञ्चमभागीयाऽरत्निस्तथोर्वस्थि ४ पादेष्टका पादमात्री । तत्र याथाकामी शब्दार्थस्य विशयित्वात् ५ उपधानेऽष्टावष्टौ पादेष्टकाश्चतुर्भागीयानां पक्षाग्रयोर्निदध्यात् ६ संध्योश्च तद्वदात्मानं षडङ्गुलोपेताः ७ श्रोण्य ँसेऽष्टौ प्राचीः प्रतीचीश्च ८ संध्यन्तराले पञ्चमभागीयाः सपादाः ९ पुच्छे प्रादेशमुपधाय १० सर्वमग्निं चतुर्भागीयाभिः प्रच्छादयेत् ११ पादेष्टकाभिः संख्यां पूरयेत् १२ अपरस्मिन्प्रस्तारे पुच्छाप्यये पञ्चमभागीया विशयाः १३ ता आत्मनि चतुर्दशभिः पादैर्यथायोगं पर्युपदध्यात् १४ सर्वमग्निं पञ्चमभागीयाभिः प्रच्छादयेत्पादेष्टकाभिः संख्यां पूरयेत् १५

व्यत्यासं चिनुयाद्यावतः प्रस्तारा॑ँश्चिकीर्षेत् १६ एकविधप्रभृतीनां करणीं द्वादशेन त्रयोदशेन वेष्टकाः कारयेत् १७ पादेष्टकाश्च १८ व्यत्यासं चिनुयाद्यावतः प्रस्तारा॑ँश्चिकीर्षेत् १९ एकविधप्रभृतीनां प्रथमाहारेण द्वितीयेन तृतीयेन यो युज्येत सर्वेषां यथाश्रुति संख्या तथोर्ध्वप्रमाणम् २० काम्या गुणविकारा गुणशास्त्रत्वात् २१ प्रउगचितं चिन्वीत भ्रातृव्यवानिति विज्ञायते २२ शकटाकृतिर्भवति २३ यावानग्निः सारत्निप्रादेशो द्विस्तावतीं भूमिं चतुरश्रां कृत्वा २४ पूर्वस्याः करणया अर्धाच्छ्रोणी प्रत्यालिखेत्सा नित्या प्रउगम् २५ करणानि चयनमित्येकविधोक्तम् २६ प्रउगा इष्टकाः कारयेत् २७ उभयतःप्रउगं चिन्वीत यः कामयेत सजातान् भ्रातृव्यान्नुदेय प्रतिजनिष्यमाणानिति विज्ञायते । उभयतः शकटाकृतिर्भवति २८ यथा विमुखे शकटे तदेतदेव दीर्घचतुरश्रं विहृत्य पूर्वापरयोः करणयोरर्थात्तावति दक्षिणोत्तरयोनिंपातयेत्सा नित्योभयतःप्रउगः २९ प्रउगचितोक्त उभयतःप्रउगा इष्टकाः कारयेत् ३० रथचक्रचितं चिन्वीत भ्रातृव्यवानिति विज्ञायते । परिमण्डलो भवति ३१ यावानग्निः सारत्निप्रादेशस्तावतीं भूमिं परिमण्डलां कृत्वा ३२ तस्मि॑ँश्चतुरश्रमवदध्याद्यावत्संभवेत् ३३ तस्य करणया द्वादशेने-ष्टकाः कारयेत्तासा॑ँ षट्प्रधावुपधाय शेषमष्टधा विभजेत् ३४ उपधाने चतुरश्रस्यावान्तरदेशान्प्रति स्रक्तीः संपादयेत् । मध्या-नीतरस्मिन्प्रस्तारे व्यत्यासं चिनुयाद्यावतः प्रस्तारा॑ँश्चिकीर्षेत् ३५ द्रोणचितं चिन्वीतान्नकाम इति विज्ञायते ३६ सर्वस्या भूमेर्दशमं त्सरुः ३७ तस्य पुच्छेन निह्रास उक्तः ३८ तस्य करणया द्वादशेनेष्टकाः कारयेत् ३९ अध्यर्धाः पादेष्टकाश्च ४० उपधानेऽध्यर्धाःपुरस्तात् प्रतीचीरात्मन्युपदध्यात् । त्सर्वग्रे श्रोणयोश्च प्राचीः सर्वमग्निं चतुरश्राभिः प्रच्छादयेत् । पादेष्टकाभिः संख्यां पूरयेत् ।

अपरस्मिन्प्रस्तारेऽध्यर्धा दश दक्षिणत उदीचीरात्मन्युपदधाति । उत्तरतश्च दक्षिणा त्सरुपार्श्वयोर्दक्षिणा उदीचीश्च सर्वमग्निं चतुरश्राभिः प्रच्छादयेत् । पादेष्टकाभिः संख्यां पूरयेत् । व्यत्यासं चिनुयाद्यावतः प्रस्तारा॑ँश्चिकीर्षेत् ४१ समूह्यं चिन्वीत पशुकाम इति विज्ञायते ४२ समूहन्निवेष्टका उपदधाति ४३ दिक्षु चात्वालावटान्खात्वा तेभ्यः पुरीषमभ्यूहतीत्येकेषाम् ४४ परिचाय्यं चिन्वीत ग्रामकाम इति विज्ञायते ४५ मध्यमा॑ँ स्वयमातृण्णां प्रदक्षिणमिष्टकागणैः परिचि- नोति स परिचाय्यः ४६ उपचाय्यं चिन्वीत पशुकाम इति विज्ञायते ४७ परिचाय्येनोक्तः श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति विज्ञायते ४८ द्वयानि खलु श्मशानचितानि चतुरश्राणि परिमण्डलानि च तत्र याथाकामी शब्दार्थस्य च विशयित्वात् ४९ चतुरश्रं वा यस्य गुणशास्त्रं च चतुरश्रः ५० त्सरुवर्जं द्रोणचितोक्तः ५१ छन्दश्चितं चिन्वीत पशुकाम इति विज्ञायते ५२ सर्वैश्छन्दोभिश्चिनुयादित्येकम् । प्राकृतैरित्यपरम् ५३

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चविंशप्रश्ने चतुर्थः पटलः

## अथ पञ्चमः पटलः

श्येनचितं चिन्वीत स्वर्गकाम इति विज्ञायते १ वक्रपक्षो व्यस्तपुच्छः श्येनाकृतिर्भवति २ पश्चात्प्राङुदूहति ३ पुरस्तात्प्रत्यङ्ङुदूहति ४ एवमिव हि वयसां मध्ये पक्षिनिर्णामो भवतीति विज्ञायते ५ यावानग्निः सारत्निप्रादेशः सप्तविधः संपद्यते ६ प्रादेशश्चतुर्थमात्मन- श्चतुर्भागीयाश्चाष्टौ ७ तासां तिस्रः शिरः ८ इतरत्पक्षयोर्विभजेत् ९ पञ्चारत्निः पुरुषः १० चतुररत्निर्व्यायामश्चतुर्वि॑ँशत्यङ्गुलयोऽरत्निः ११ तदर्धं प्रादेश इति क्लृप्तिः १२ अर्धदशमा अरत्नयोऽङ्गुलिश्चतुर्भागोना

पक्षायामः १३ द्विपुरुषाँ रज्जुमुभयतःपाशां करोति १४ मध्ये लक्षणम् १५ पक्षस्यापरयोः कोट्योरन्तौ नियम्य लक्षणेन प्राचीनमायच्छेदेवं पुरस्तात्सनिर्णाम एतेनोत्तरः पक्षो व्याख्यातः १६ आत्मा द्विपुरुषा-यामोऽध्यर्धपुरुषव्यासः १७ पुच्छेऽर्धपुरुषव्यासं पुरुषं प्रतीचीनमा-यच्छेत् १८ तस्य दक्षिणतोऽन्यमुत्तरतश्च १९ तावद्क्ष्णयाऽऽ-लिखेद्यथाऽर्धपुरुषोऽप्यये स्यात् २० शिरस्यर्धपुरुषेण चतुरश्रं कृत्वा पूर्वस्याः करण्या अर्धात्ताविति दक्षिणोत्तरयोर्निपातयेत् २१ अप्ययान्प्रति श्रोणयँसानपच्छिन्द्यात् २२ ख० १५ ॥ एवमिव हि श्येनम् २३ करणं पुरुषस्य पञ्चमायामँ षष्ठं व्यासं कारयेद्यथायोगनतं तत्प्रथमम् २४ ते द्वे प्राची सँहिते तद्द्वितीयम् २५ प्रथमस्य षड्भागमष्टभागेन वर्धयेद्यथायोगनतं तत्तृतीयम् २६ चतुर्भागीया-ऽध्यर्धा तस्याश्चतुर्भागीयामात्रमक्ष्णया भिन्द्यात्तच्चतुर्थम् २७ चतु-र्भागीयार्धं पञ्चमम् २८ तस्याक्ष्णया भेदः षष्ठम् २९ पुरुषस्य पञ्चमभागं दशभागं व्यासं प्रतीचीनमायच्छेत् । तस्य दक्षिणतो-ऽन्यमुत्तरतश्च तावद्क्ष्णया दक्षिणापरयोः कोट्योरालिखेत्तत्सप्तमम् ३० एवमन्यदुत्तरं ज्ञेयं तूत्तरस्याः कोट्या आलिखेत्तदष्टमम् ३१ चतुर्भागीयाक्ष्णयोभयतो भेदो नवमम् ३२ उपधाने षष्टिः षष्टिः पक्षयोः प्रथमा उदीचीर्निदध्यात् ३३ पुच्छपार्श्वयोरष्टावष्टौ षष्ठ्यः ३४ ख० १६ ॥ तिस्रोऽग्रे तत एकां ततस्तिस्रस्तत एकाम् ३५ पुच्छाप्यये चतुर्थ्यौ विशये ३६ तयोश्च पश्चात्पञ्चम्यावनीकसँहिते ३७ शेषे दश चतुर्थ्यः ३८ श्रोणयँसेष्वष्टौ प्राचीः प्रतीचीश्च ३९ शेषे च षड्विँशतिरष्टौ षष्ठ्यश्चतस्रः पञ्चम्यः ४० शिरसि चतुर्थ्यौ विशये तयोश्च पुरस्तात्प्राच्यौ ४१ एष द्विशतः प्रस्तारः ४२ अपरस्मिन्प्रस्तारे पक्षनिर्णामयोः पञ्च पञ्च द्वितीयाः ४३ अप्ययोश्च तृतीया आत्मानमष्टभागावेताः ४४ शेषे पञ्चचत्वारिँशत्पञ्चचत्वारिँश-

त्प्रथमाः प्राचीर्निदध्यात् ४५ पुच्छपार्श्वयोः पञ्च पञ्च सप्तम्योः ४६ द्वितीयचतुर्थ्योश्चान्यतरतः प्रतिसँहितामेकैकाम् ४७ शेषे त्रयोदशाष्टम्यः ४८ श्रोणयँसेष्वष्टौ चतुर्थ्यो दक्षिणा उदीचीश्च ४९ शेषे च विँशतिस्त्रिँशत्षष्ठ्य एकां पञ्चमीम् ५० शिरसि चतुर्थ्यौ तयोश्च पुरस्ताच्चतस्रो नवम्यः ५१ एष द्विशतः प्रस्तारः ५२ व्यत्यासं चिनुयाद्यावतः प्रस्ताराँश्चिकीर्षेत् ५३

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चविंशप्रश्ने पञ्चमः पटलः

## अथ षष्ठः पटलः

श्येनचितं चिन्वीत स्वर्गकाम इति विज्ञायते १ वक्रपक्षो व्यस्तपुच्छः श्येनाकृतिर्भवति २ पश्चात्प्राङुदूहति ३ पुरस्तात्प्रत्यङ्ङुदूहति ४ एवमिव हि वयसां मध्ये पक्षनिर्णामो भवतीति विज्ञायते ५ पुरुषस्य षोडशीभिर्विँशँ शतँ सारत्निप्रादेशः सप्तविधः संपद्यते । तासां चत्वारिँशदात्मनि तिस्रः शिरसि पञ्चदश पुच्छ एकत्रिँशद्दक्षिणे पक्षे । तथोत्तरे ६ अध्यर्धपुरुषास्तिर्यग्द्वावायामत इति दीर्घचतुरश्रं विहृत्य श्रोणयँसेभ्यो द्वे द्वे षोडश्यौ निरस्येत् ७ चत्वारिँशत्परिशिष्यन्ते । स आत्मा शिरस्यर्धपुरुषेण चतुरश्रं कृत्वा पूर्वस्याः करण्या अर्धात्तावति दक्षिणोत्तरयोर्निपातयेत् ८ तिस्रः परिशिष्यन्ते तच्छिरः ९ पुरुषस्तिर्यग्द्वावायामतः षोडशभागश्च दक्षिणः पक्षः ९ तथोत्तरः पक्षाग्रे पुरुषचतुर्थेन चत्वारि चतुरश्राणि कृत्वा तान्यक्ष्णया व्यवलिख्यार्धानि निरस्येत् ११ एकत्रिँशत्परिशिष्यन्ते १२ पक्षाग्रमुत्सृजन्मध्ये पक्षस्य प्राचीं लेखामालिखेत् १३ पक्षाप्यये पुरुषं नियम्य लेखायां पुरुषान्ते नितोदं कुर्यान्नितोदात् प्राचीनं पुरुषान्ते नितोदयोर्नानान्तावालिखेत्तत्संनमनम् १४ एतेनोत्तरः पक्षो व्याख्यातः १५ द्विपुरुषं पश्चादर्धपुरुषं

पुरस्ताच्चतुर्भागोनः पुरुष आयामोऽष्टादश करण्यौ पार्श्वयोस्ताः पञ्चदश परिगृह्णन्ति तत्पुच्छम् १६ षोडशीं चतुर्भिः परिगृह्णीयात् १७ अष्टमेन त्रिभिरष्टमैश्चतुर्थेन चतुर्थमविशेषेणेति १८ अर्धेष्टकां त्रिभिः १९ द्वाभ्यां चतुर्थाभ्यां चतुर्थसविशेषेणेति २० पादेष्टकां त्रिभिः २१ चतुर्थेनैकं चतुर्थसविशेषाभ्यां चेति २२ पक्षेष्टकां चतुर्भिः २३ द्वाभ्यां चतुर्भ्यां सप्तमाभ्यां च २४ पक्षमध्यभ्यां चतुर्भिः २५ द्वाभ्यां चतुर्थाभ्यां द्विसप्तमाभ्यां चेति २६ पक्षाग्रीयां त्रिभिः २७ चतुर्थेनैकम् । चतुर्थसप्तमाभ्यामेकम् । चतुर्थसविशेषसप्तमाभ्यां चेति २८ पक्षकरण्याः सप्तमं तिर्यङ्मानी पुरुषचतुर्थं च पार्श्वमानी तस्याक्ष्णया-रज्ज्वा करणं प्रजृम्भयेत् २९ पक्षनमन्याः सप्तमेन फलकानि नमयेत् ३० उपधाने चतस्रः पादेष्टकाः पुरस्ताच्छिरसि ३१ अपरेण शिरोप्ययं पञ्च ३२ पूर्वेण पक्षाप्ययावेकादशापरेण ३३ एकादश पूर्वेण ३४ पुच्छाप्ययं पञ्चापरेण पञ्च ३५ पञ्चदश पुच्छाग्रे ३६ चतस्रश्चतस्रः पक्षाग्रीयाः पक्षाग्रयोः ३७ पक्षाप्यययोश्च विशयाः ३८ आत्मनि चतसृभिश्चतसृभिः षोडशभिर्यथायोगं पर्युपदध्यात् ३९ चतस्रश्चतस्रः पक्षमध्यीयाः ४० पक्षमध्ययोः पक्षेष्टकाभिः प्राचीभिः पक्षौ प्रच्छादयेत् ४१ अवशिष्टं षोडशभिः प्रच्छादयेत् ४२ अन्त्या बाह्या विशेषाः ४३ अन्यत्र शिरसः ४४ अपरस्मिन्प्रस्तारे पुरस्ताच्छिरसि द्वे षोडश्यौ बाह्यविशेष उपदध्यात् ४५ ते अपरेण द्वे विशये । अभ्यन्तरविशेषे ४६ द्वाभ्यामर्धेष्टकाभ्यां यथायोगं पर्युपदध्यात् ४७ बाह्याविशेषाभ्यां परिगृह्णीयात् ४८ आत्मकरणीनाँ संधिषु षोडश्यो बाह्यविशेषा उपदध्यात् ४९ चतस्रश्चतस्रोऽर्धेष्टकाः पक्षाग्रयोः ५० पक्षेष्टकाभिरुदीचीभिः पक्षौ प्रच्छादयेत् ५१ तिस्रस्तिस्रोऽर्धेष्टकाः पुच्छपार्श्वयोः ५२ अवशिष्टँ षोडशीभिः प्रच्छादयेत् ५३ अन्त्या बाह्यशेषा अन्यत्र पुच्छात् ५४ यच्चतुरश्रं त्र्यश्रि वा संपद्येतार्धेष्टकाभिः

पादेष्टकाभिर्वा तत्प्रच्छादयेत् ५५ पादेष्टकाभिः संख्यां पूरयेत् ५६ अणूकाः पञ्चदश भागीयानां स्थाने ५७ व्यत्यासं चिनुयाद्यावतः प्रस्तारा꣡श्चिकीर्षेत् ५८ कङ्कचिदलजचिदिति श्येनचिता व्याख्यातौ ५९ एवमिव श्येनस्य वर्षीया꣡सौ पक्षौ पुच्छाद्वक्रौ संनतं पुच्छं दीर्घ आत्माऽमण्डलः शिरश्च ६० तस्माच्छ्रुतिसामर्थ्यात् ६१ अशिरस्को वा ६२ अनाम्नानात् ६३ विज्ञायते च कङ्कचित꣡ शीर्षण्वन्तं चिन्वीत । यः कामयेत सशीर्षाऽमुष्मिँल्लोके संभवेयमिति विद्यमाने कथं ब्रूयात् ६४ प्राकृतौ वक्रौ पक्षौ संनतं पुच्छं विकारश्रवणात् ६५ यथाप्रकृत्यात्माऽविकारात् ६६ यथो एतच्छ्येनचितिं चिन्वीतेति यावदाम्नानसारूप्यं तद्व्याख्यातम् ६७ त्रिस्तायोऽग्निर्भवतीत्यश्वमेधो विज्ञायते । तत्र सर्वाभ्यासोऽविशेषात् ६८ दीर्घचतुरश्राणा꣡ समासेन पक्षपुच्छाना꣡ समास उक्तः ६९ एकवि꣡शोऽग्निर्भवती-त्यश्वमेधे विज्ञायते ७० तत्र पुरुषाभ्यासो नारत्निप्रादेशानाँ संख्यासंयोगात्संख्यासंयोगात् ७१

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चविंशप्रश्ने षष्ठः पटलः प्रश्नश्च

ॐ तत्सद्ब्रह्मणे नमः

# अथ चयनोपयोगिकारिकाः

अकैकहोमे दारिद्र्यं धनिकत्वं समुच्चये
ऋचं यद्यन्तिमां कुर्याच्छन्दोगामि फलं भवेत् १
अतोऽन्तिमं यजुः कुर्याद्यज्वगामिफलाप्तये
खादिरी वैणवी वाऽभ्रिः कल्माषी सुषिरा न वा २
क्ष्णुता चोभयतो वाऽन्यतरतो ब्रह्मवृक्षजा
अर्कोदुम्बरशम्युत्था वाऽन्याफलतरूद्भवा ३
व्याममात्री मुष्टिमात्री बाहुमात्री ह्यथापि वा

अरत्निमात्री प्रादेशमात्री वा ह्यमिताऽपि वा ४
पिष्टान्यर्मकपालानां वेणवङ्गारोद्भवान्यपि
तुषा व्रीहिसमुत्पन्नाः पलाशजकषायकः ५
शर्कराः सूक्ष्मपिष्टास्तु लोमानि मृगचर्मणः
अजलोमान्यपि तथा ये चान्ये दृढहेतुकाः ६
एते संसर्जनीयास्तु प्रवर्ग्योखेष्टकादिषु
शून्यग्रामस्थमृद्भाण्डखण्डं त्वर्मकपालकम् ७
प्रादेशोच्चाऽरत्निमिता तिर्यग्व्यायामसंमिता
समन्तपरिमाणेन वाऽमिता चतुरश्रिका ८
समान्तरालाऽष्टाश्रिर्वा बौधायनमतानुगा
परिमण्डलका वाऽभिचारादौ तु नवाश्रिका ९
मध्यदेशे तु रास्ना वा बिलदेशसमीपतः
द्वौ यदा प्राग्दिशि स्यातां चत्वारो दिक्चतुष्टये १०
षड्यदा दिग्द्वये द्वौ द्वावेकैकः शिष्टदिग्द्वये
अष्टौ यदा चतुर्दिक्षु द्वौ द्वावेवं स्तनस्थितिः ११
रास्नाश्रिसंधावष्टौ स्युस्तनास्त्वष्टाश्रिपक्षके
रास्नाश्रिसंधावष्टौ स्युर्द्विचतुःषट् च वा स्तनाः १२
संवत्सरं द्वादशाहं षडहं वा त्र्यहं तु वा
दीक्षाकल्पाः क्रतोः साग्नेर्ब्राह्मणे नित्यवच्छ्रुताः १३
तत्रैकदीक्षापक्षोऽपि स्थितो वाजसनेयके
अपरे श्येनसंज्ञेऽग्नौ करण्योऽष्टौ भवन्ति च १४
षोडश्यर्ध्या तथा पाद्या पक्षजा पक्षमध्यिका
पक्षाग्रया द्वे अणूके च सूत्रक्लृप्ताः षडेव वा १५
षोडश्या दक्षिणं पार्श्वमत्र पञ्चदशाङ्गुलम्
त्रिंशत्तु पश्चिमं चोदक्चत्वारिंशच्च पञ्च च १६

द्विचत्वारिंशदङ्गुल्यश्चार्धपञ्चदशास्तिलाः
अद्गणयामानमेतैस्तु चतुर्भिश्चतुरश्रिका १७
पूर्वश्येने चतुर्थी या सा परे षोडशी मता
अर्ध्या तु स्यात्त्रिफलका द्वे स्यातां त्रिंशदङ्गुले १८
द्विचत्वारिंशदङ्गुल्यश्चार्धपञ्चदशास्तिलाः
तृतीयफलकस्येदं मानमेवं त्रिकोणका १९
पाद्यां त्रिफलका प्रोक्ता तत्रैकं त्रिंशदङ्गुलम्
सपादतिलसप्तैकविंशत्यङ्गुलके परे २०
त्रिंशत्तु पार्श्वफलके तिर्यक्सप्तदशाङ्गुले
तिलपञ्चकसंयुक्त एषा पद्मेष्टका मता २१
चत्वारिंशत्कर्ण एकस्तिलैर्द्वादशभिर्युतः
सप्तविंशतिरन्यस्तु तिलविंशतिसंयुतः २२
पद्मेष्टके महत्पार्श्वसंश्लिष्टे स्यात्षडस्रिका
पद्ममध्या तु सा षड्भिः फलकैर्मध्यमोज्झिता २३
पद्मेष्टकोत्तरे पार्श्वे त्वर्ध्यापार्श्वे नियोजिते
पञ्चभिः फलकैः पञ्चकोणाग्रीयोदगग्रका २४
अस्या दक्षिणपार्श्वस्थं फलकं त्रिंशदङ्गुलम्
तिर्यक्पार्श्वे पञ्चतिलैर्युक्ते सप्तदशाङ्गुले २५
अर्ध्यापश्चिमपार्श्वं तु त्रिंशदङ्गुलसंमितम्
वायव्याग्नेयगं पार्श्वं द्विचत्वारिंशदङ्गुलम् २६
सार्धैश्चतुर्दशतिलैर्युक्तमेपेष्टकाकृतिः
अर्ध्यामहत्पार्श्वमिते द्वे पार्श्वे संगताग्रके २७
षष्टयङ्गुलं तृतीयं स्यादणूकाऽऽद्या त्रिकोणका
द्वे पार्श्वे पूर्ववज्ज्ञेये तिरश्चयौ त्रिंशदङ्गुले २८
पद्मेष्टकाकृतिश्चैषाऽणूकाऽन्या चतुरश्रिका

अस्या एकाद्दणयारज्जुस्त्रिंशदङ्गुलसंमिता २९
सप्तषष्ट्यङ्गुलाऽन्या स्यादत्यष्टिवितिलैर्युता
षोडशीपद्मजाणूकापद्माग्रीयाप्रधीष्टकाः ३०
अग्रदीर्घादिकाश्चान्या एतासां द्विविधा कृतिः
न्युब्जोत्तानैस्तु करणैरिष्टसंख्यानुरूपतः ३१
षोडश्यस्तु शतं सार्धमध्यांश्चाब्धियुतं शतम्
पाद्यास्तु शतसंख्याका एकसप्ततिसंयुताः ३२
पद्मेष्टकास्तु षट्षष्टियुक्तं शतचतुष्टयम्
चतुर्विंशतिसंख्याकाः पद्ममध्येष्टका इह ३३
चत्वारिंशत्तथा चाष्टौ पद्माग्रीयेष्टका मताः
नवाणूकास्त्रिकोणाः स्युस्त्रयस्त्रिंशत्तथाऽपराः ३४
अणूकानामभावे तु तत्संख्याः षोडशीष्टकाः
चोडान्विताः पञ्चयुतं सहस्रं प्रथमे मताः ३५
षट्पाद्या नाकसच्चोडाश्चतस्त्रः पद्मसंज्ञिकाः
सार्धसप्तविधस्याग्नेरेतन्मानं प्रपञ्चितम् ३६
विधान्यत्वे तु पुरुषं साधयेच्छुल्बमार्गतः
प्रक्रमादिप्रमाणानि तस्यैव पुरुषस्य हि ३७
षडङ्गुल्यः किंचिदूनचतुर्दश तिला अपि
ऊर्ध्वप्रमाणं सर्वासामिष्टकानां भवेदिह ३८
दश चोडा नाकसदस्तदर्धोत्सेधका मताः
गार्हपत्यस्य तु चितेः करणं वद्दयतेऽधुना ३९
तत्र द्वात्रिंशदङ्गुल्यो द्वयोः फलकयोर्मितिः
अन्ययोस्तु द्वयोर्मानमङ्गुलानि त्रयोदश ४०
सहपादतिलोपेतचतुर्विंशतिकैस्तिलैः
एवं चतुर्भिः फलकैस्तद्दीर्घचतुरस्त्रकम् ४१

करणेनेष्टकाः कार्यास्तेन पञ्चोत्तरं शतम्
नैर्ऋत्याख्येष्टकास्तिस्त्र एतेन करणेन हि ४२
परिमण्डलपक्षे तु व्यायामार्धेन मण्डलम्
तन्मध्ये परिधिं स्पष्टं चतुरश्रं समं लिखेत् ४३
चतुर्भिस्तु तिलैर्हीनमष्टषष्ट्यङ्गुलं च तत्
त्रेधा समं विभज्याथ प्राक्प्रत्यग्दक्षिणोत्तरम् ४४
जाता नवेष्टकास्तत्र दिक्स्थं चापचतुष्टयम्
प्रत्येकं तु त्रिधा कृत्वा तत्र द्वादश चेष्टकाः ४५
द्वाविंशत्यङ्गुलं चैकविंशत्या च तिलैर्युतम्
नवानां चतुरश्राणां करणं त्वेकमेव हि ४६
प्रधिमध्यं द्वितीयं स्याच्चतुर्भिः फलकैर्युतम्
प्रध्यन्तं तु तृतीयं च त्रिकोणं फलकैस्त्रिभिः ४७
प्रधिमध्यीयपार्श्वे द्वे दीर्घे प्राग्वदथापरे
तिलैर्दशभिरूने द्वे त्र्यधिके च दशाङ्गुले ४८
तन्मध्ये दीर्घफलकं तक्षेद्धनुरिवात्र च
यथा सूर्यतिलोपेतमङ्गुलं तु शरो भवेत् ४९
प्रध्यन्तस्यैकपार्श्वं तु चतुरश्रवदेव हि
त्रयोदशाङ्गुलं त्वन्यत्तिलैर्दशभिरूनितम् ५०
बाह्यपार्श्वं तिलद्व्यूनं षड्विंशत्यङ्गुलं च तत्
तक्षेत्सप्ततिलोने द्वे अङ्गुले स्याद्यथा शरः ५१
विदिक्षु विषमे कोणाः समे दिक्षु भवन्ति च
एवं मण्डलपक्षेऽत्र मानमेतत्प्रपञ्चितम् ५२
धिष्णियानां प्रमाणं तु पिशीलं सूत्रचोदितम्
तच्च षोढा वदन्त्यार्या बाह्वोरन्तरमादिमम् ५३
रत्निस्तथाऽरत्निमितं द्वात्रिंशच्चाङ्गुलं त्विह

षट्त्रिंशदङ्गुलं चैव षष्ठं प्रादेशसंमितम् ५४
अष्टाङ्गुलैस्तु फलकैश्चतुर्भिश्चतुरश्रकम्
एतेनैकोनषष्टिः स्युराग्नीध्रीयेष्टका इह ५५
अष्टाङ्गुले द्वे फलके द्वे चान्ये तु षडङ्गुले
एतेन करणेनात्र होत्रीयाख्यास्तु विंशतिः ५६
अष्टाङ्गुले द्वे फलके द्वे चान्ये द्वादशाङ्गुले
एवं करणमेतेन द्वाविंशतिरिहेष्टकाः ५७
धिष्ण्येष्टकास्त्वेकशतं करणैः स्युस्त्रिभिः पृथक्
एतासामुपधानं तु यथा रत्निमितं समम् ५८
धिष्ण्येष्टकासु सर्वासु गार्हपत्येष्टकासु च
अण्वाद्यङ्गुलतो मानं न त्विहाऽऽग्निकमङ्गुलम् ५९
ऊर्ध्वमानेऽपि सर्वासामिष्टकानामयं विधिः

--------------

अथ प्राग्वंशकरणम्--

यज्ञं चिकीर्षुरादौ तु गणपत्यादिपूजनम् ६०
कृत्वाऽथ देवयजनयोग्यां भूमिं प्रकल्पयेत्
पृष्ठ्यासूत्रं तत्र दद्यात्प्राञ्चं त्विष्टाधिकं स्थिरम् ६१
अत्र साधारणं वक्ष्ये पुरुषादिप्रमाणकम्
समस्थितो वा पादाग्रस्थितो वा यजमानकः ६२
ऊर्ध्वबाहुः स पुरुषः पञ्चारत्निः प्रकीर्तितः
तस्य विंशाधिकशततमो भागोऽङ्गुलं स्मृतम् ६३
अङ्गुलस्य चतुस्त्रिंशो भागस्तु तिलसंज्ञकः
अग्निमानेऽङ्गुलमिदं विहारादिषु तूच्यते ६४
चतुर्दशाणुभिर्वाऽथ कोशस्थाब्ध्यग्निभिस्तिलैः
अष्टभिर्वा यवैः प्रोक्तं चतुर्थं लौकिकाङ्गुलम् ६५

प्रादेशश्च वितस्तिश्च द्वादशाङ्गुलमानतः
जिनाङ्गुलस्त्वरत्निः स्याद्रत्निर्व्यष्टयंश ईरितः ६६
चतुर्विंशाङ्गुलो हस्तः शम्या सट्त्रिंशदङ्गुला
द्वात्रिंशदङ्गुलो जानुर्बाहुस्तु द्विपदः स्मृतः ६७
अष्टाशीतिशतं त्वीषा तिर्यगक्षश्चतुःशतम्
षडशीतियुगं प्रोक्तं त्रिविधं पदमीरितम् ६८
तत्र तिथ्यङ्गुलं मुख्यं तथा च द्वादशाङ्गुलं
दशाङ्गुलमपि क्षुद्रं लौकिकं वा क्वचिद्भवेत् ६९
पदेनैकेनैकपदः प्रक्रमः परिकीर्तितः
द्वाभ्यां तु द्विपदः प्रोक्तस्त्रिभिश्च त्रिपदः स्मृतः ७०
प्रक्रमाङ्गुलयः पञ्चचत्वारिंशत्परोऽवधिः
द्विपदः क्षुद्रमानेन विधैकत्वे नखाङ्गुलः ७१
चतुर्षु द्विविधाद्येषु चतुर्विंशतिरङ्गुलः
त्रिंशदङ्गुलमात्रस्तु षड्विधादिषु सप्तसु ७२
त्रिपदस्त्वत ऊर्ध्वं स्यात्तिथ्यर्काङ्गुलमानतः
साग्निचित्ये क्रतावग्निसमावेशो यथा भवेत् ७३
तथा प्रक्रमक्लृप्तिः स्याद्यावत्प्रक्रमकल्पना
ऊर्ध्वं बौधायनप्रोक्तं मानदण्डविवर्धनम् ७४
अथवाऽऽदित एव स्यादग्न्यावेशानुरूपतः
अत्रार्धाष्टमके ह्यग्नौ प्रक्रमस्त्रिंशदङ्गुलः ७५
अनेन च त्रिपञ्चाशत्प्रक्रमां मापयेद्ध्रुवम्
प्राञ्चं तथैव चोदञ्चं षट्त्रिंशत्प्रक्रमाधिकाम् ७६
प्रान्त्यशङ्कू ततो दत्त्वा विहारं साधयेत्सुधीः
द्विप्रक्रमा पश्चिमान्ते पत्नीशालाऽदितो भवेत् ७७
ततः प्राग्द्वादशायामा दशविस्तृतिसंयुता

प्राग्वंशाद्दिक्वतीकाशा मध्योच्चा पार्श्वनिम्नगा ७८
पुरस्तादुन्नता कार्या पश्चान्नीचा परिश्रिता
गवाक्षपञ्चकवती शाला तोरणमण्डिता ७९
तस्यां पश्चिमशङ्कोस्तु प्राक्सार्धप्रक्रमद्वये
शङ्कुः स संचरान्त्यः स्यात्ततः प्राक्धिष्ण्यमेखला ८०
षडङ्गुला ततः प्राक्स्याद्गार्हपत्यस्य धिष्ण्यम्
सप्तविंशत्यङ्गुलं स्यात्ततः क्रमचतुष्टयम् ८१
तन्मध्ये प्राकृती वेदिः शर्करोछ्रायणादि च
ततः प्राग्गार्हपत्यस्य चितिक्षेत्रं समन्ततः ८२
षण्णवत्यङ्गुलं तस्माच्छर्करार्थं षडङ्गुलम्
तस्मात्प्रक्रममात्रस्तु शालान्तः संचरः स्मृतः ८३
द्वादशप्रक्रमाणं च विभाग इति कीर्तितः
अन्तरालं पञ्चधा वा षोढा वेत्यादिकल्पतः ८४
दक्षिणाग्नेरायतनं यज्वस्थानादिकं भवेत्
ईशान्यां खरमुच्छिष्टमुदङ्गिनम्नं प्रसाधयेत् ८५
द्विपदो द्वारविस्तारोऽरत्निमात्रोऽपि वा भवेत्
पार्श्वनिम्नत्वमेवापि नाभिमात्रमुदाहृतम् ८६
अदीक्षितस्योपरिष्टाद्वायव्यस्य पशोः कृतिः
इष्टकानां भवेत्त्र्यादिदीक्षाकल्पेष्वियं स्थितिः ८७
मासादिदीक्षाकल्पेषु दीक्षितस्यैव सा भवेत्
मृन्मय्यस्त्विष्टकाः कार्या यथाकाले भवन्ति ताः ८८
मण्डला ऋषभा चेति चिह्नयोदिष्टकासु च
गोशकृदिक्षुपत्राद्यैस्तुषैराम्रादिपर्णकैः ८९
पचन्ति लोहिनीः सर्वास्त्विष्टकाः स्युर्दृढा यथा
छिन्नैकदेशा खण्डा स्यात्किंचित्कृष्णाऽपि कृष्णका ९०

स्यात्तु लोहान्यवर्णा वा लक्ष्मणा सा प्रकीर्तिता
भिन्ना तु स्फुटिता ज्ञेया नोपदध्याच्चिरोषिता ९१
अमृन्मयैः पुष्कराद्यैर्नेष्टसंख्यां प्रपूरयेत्
आद्यं चिन्वानश्चिन्वीत साहस्रमिति वै श्रुतिः ९२
द्वितीयं तु द्विषाहस्रं त्रिषाहस्रं तृतीयकम्
ज्यायांसमत ऊर्ध्वं तु चिन्वीतोत्तरमुत्तमम् ९३
पञ्चचितीकमेकैके प्रस्तारे द्विशतं मतम्
संख्येकार्धोच्चचोडाभिर्नाकसद्भिश्च पञ्चभिः ९४
साहस्रं जानुदघ्नं स्यान्नाभिदघ्नं द्वितीयकम्
आस्यदघ्नं त्रिषाहस्रमत ऊर्ध्वं त्रिधोदितम् ९५
महान्तं च बृहन्तं च ह्यमितं काम्यमीरितम्
महान्तं तु त्रिषाहस्रादुच्चत्वेन निरूपितम् ९६
बृहन्तं च त्रिषाहस्राद्द्विधाधिक्यं प्रकीर्तितम्
तथाऽपरिमितं त्रिभ्यः साहस्रेभ्यस्त्वसंख्यकम् ९

------------------

अथ गार्हपत्यचितीष्टकोपधानम्

शुल्बमन्त्रोपधानं तु चतुरश्रस्य कथ्यते
प्रागायतानां सप्तानां रीतिराद्यचिताविह ९८
एवमेवापरे एता द्वितीये तूदगायताः
एकविंशतिसंख्याभिश्चितिरेवं तु पञ्च ताः ९९
मध्यरीतौ द्वितीयाद्याश्चतस्र उदगन्तकाः
पूर्वस्यामपरस्यां च चतुर्थीपञ्चमीद्वयम् १००
एवमष्टौ मन्त्रवत्यस्त्ववशिष्टास्त्रयोदश
लोकंपृणा अथैतासां प्रादक्षिण्यक्रमात्स्थितिः १०१
अपरस्मिन् द्वितीयाद्याश्चतस्रः पूर्वसंस्थकाः

उत्तरस्यां दक्षिणस्यां चतुर्थीपञ्चमीद्वयम्  १०२
एवमष्टौ मन्त्रवत्यः शिष्टा लोकंपृणाः क्रमात्

------------

अथ महावेदिसदोहविर्धानाग्नीध्रीयमार्जालीयोप-
रवधिष्ण्यादिमानान्युच्यन्ते

प्राग्वंशपूर्वशङ्कोस्तु पुरस्तात्प्रक्रमत्रये  १०३
वेदिपाश्चात्यशङ्कुः स्यादयमेवात्र संचरः
पूर्वोक्तः प्रक्रमस्त्वत्र वेदिमानं भवेदिति  १०४
सद आदीनि मानानि सोमवत्स्युररत्निना
पाश्चात्यशङ्कुतः प्राक्स्यात्पृष्ठ्यायां प्रक्रमत्रये  १०५
सदःपश्चिमगः शङ्कुस्तस्मात्प्राक्तच्चतुष्टये
प्रादेशोने तथा शङ्कुः स सदोमध्यगः स्मृतः  १०६
तस्माद्दक्षिणतोऽरत्नावौदुम्बर्यवटो भवेत्
मध्यात्प्राक्स्याद्द्विके शङ्कुर्धिष्ण्यानां पश्चिमावधिः  १०७
षडङ्गुलोने चैकस्मिन्धिष्ण्यपूर्वावधिस्ततः
प्रमाणमन्तरालं च धिष्ण्यानां स्यादरत्निना  १०८
अरत्निमात्रे सदसः पूर्वान्तस्तु ततः पुरः
सत्र्यङ्गुले द्विके शङ्कुर्हविर्धानापरावधिः  १०९
सूत्रे प्रमाणानुक्तत्वादवशिष्टोऽत्र संचरः
ततः पुरस्ताच्छङ्कुः स्यात्त्रिके साष्टादशाङ्गुले  ११०
मार्जाल्याग्नीध्रमध्यीयः पाश्चात्योपरवावधिः
स षडङ्गुल एकस्मिन्पौरस्त्योपरवान्तकः  १११
सप्रादेशे द्विके शङ्कुर्हविर्धानपुरोवधिः
ततः प्राक् स्यात्त्रिके शङ्कुः पुच्छाग्रीयः स ईरितः  ११२
अग्निक्षेत्रं ततः प्राक्स्यादपरे श्येनकेऽत्र तु

त्रयोदशसु मूर्ध्नोऽन्तः पदार्धं संचरः पुरः ११३
तस्माद्यूपावटीयस्तु पदार्धे पूर्वरोपितः
वेद्यायामप्रमाणं हि त्रिंशदङ्गुलमानतः ११४
अङ्गुलानां सहस्रं तु जातमेवमशीतियुक्
हविर्धानस्य दक्षार्धे प्राञ्चं सूत्रं तु मध्यतः ११५
दत्त्वा चोपरवावध्योर्मध्ये सूत्रमुदग्गतम्
संपातेऽरत्निमात्रं तु चतुरश्रं समं लिखेत् ११६
विदिक्कोणस्थशङ्कुभ्यः प्रादेशार्धेन मण्डले
कृते भवन्त्युपरवाः प्रादेशस्यान्तरालकाः ११७
नवारत्निस्तु विस्तारः सदसः सूत्रचोदितः
सप्तविंशतिरायामः पृष्ठ्योदीचीह मध्यगा ११८
मातृदत्तस्त्विदं मानं दशपेयादिषूक्तवान्
अथवाऽष्टादशायामं पदमाने पदात्मकम् ११९
मध्ये त्वौदुम्बरीस्थानं तस्मादुभयतः समम्
औदुम्बरीमितोच्चत्वं पाश्वयोर्नाभिसंमितम् १२०
पूर्वापरद्वारयुक्तमाच्छाद्यं नवभिः कटैः
नवारत्नि हविर्धानमिह क्लृप्तं दशाथवा १२१
पूर्वापरद्वारयुक्तं समं छाद्यं त्रिभिः कटैः
अथ वेद्या उत्तरांसादुदक्प्रक्रममात्रके १२२
चात्वालयाम्यपार्श्वस्य तत्र मध्यस्ततो ह्युदक्
स भवेत्तु चतुष्कोणः शम्यामात्रः समन्ततः १२३
वेद्यंसाद्द्वादशे पश्चादुदगेकं विमाय च
तस्मादुदक्चतुष्कोणो द्विपदो ह्यत्र चोत्करः १२४
चात्वालोदक्प्रक्रमान्ते शामित्रं यावदर्थकम्
तत्पूर्वार्धे तु तद्धिष्ण्यमिष्टकाभिः प्रकल्पयेत् १२५

